दशमः पाठः

# दीनबन्धुः श्रीनायारः

प्रस्तुत पाठ उड़िया भाषा के प्रख्यात साहित्यकार श्री चन्द्रशेखरदासवर्मा द्वारा विरचित 'पाषाणीकन्या' कथासंग्रह के संस्कृत अनुवाद से संकलित है।

इसके अनुवादक डॉ॰ नारायण दाश हैं। इस कथा के नायक श्रीनायार का पालन-पोषण एक अनाथाश्रम में हुआ है। श्रीनायार ने अपनी कर्मदक्षता, दाक्षिण्य और सेवामनोवृत्ति से समाज में आदर्श स्थापित किया है। वह प्रतिमास अपने वेतन का आधा से अधिक भाग केरल में स्थापित अनाथाश्रम को भेजते हैं। प्रस्तुत कथा में श्रीनायार का लोककल्याणकारी आदर्श चरित्र वर्णित है।

**श्रीनायारः केन्द्रसर्वकारतः स्थानान्तरणेन आगत्य ओडिशासर्वकारस्य अधीने प्रायः वर्षत्रयेभ्यः कार्यं करोति। तथाप्यस्मिन् वर्षत्रयात्मके कालखण्डे एकवारमपि स्वराज्यं केरलं प्रति गमनाय इच्छां न प्रकटितवान् । स स्वल्पभाषी, अतस्तस्य मनःकथा मनोव्यथा वा बोधगम्या नास्ति। सन्तुलितो वार्त्तालापः, साक्षात्समये आगमनम्, ततः सञ्चिकासु मनोनिवेशः, कार्यं समाप्य स्वगृहं प्रत्यागमनञ्च तस्य वैशिष्ट्यमासीत्। तस्य कर्मनैपुण्यं दृष्ट्वा एव ओडिशासर्वकारस्तं स्थानान्तरणेन स्वीकृत्य खाद्यापूर्तिविभागे सचिवपदे नियुक्तवान् । गतस्य वर्षत्रयस्य आकलनात् ज्ञायते यद् विभागस्य कार्यनैपुण्यं दशगुणैः वर्धितम्। खाद्ये अपमिश्रणं न्यूनीभूतम्। अत उपभोक्तॄणामपि अभियोगो नास्ति विभागस्य विपक्षे। मन्त्रिणां मध्येऽपि तस्य सुख्यातिः वर्तते।**

**श्रीनायारस्य दायित्वग्रहणस्य एकमासाभ्यन्तरे बहुदिनेभ्यः स्थगितानां विविध समस्यानामपि समाधानं जातम्। स्वकार्यं त्यक्त्वा अपरस्य सहकारस्तस्य परमधर्मः। सः प्रतिमासं प्रथमदिवसे स्ववेतनस्य अर्धाधिकं भागं केरलं प्रेषयति स्म कश्चित् सम्पर्कः। तेनानुमीयते तस्य राज्येन सह अस्ति कश्चित् सम्पर्कः। कानिचन मलयालमभाषायाः संवादपत्राणि अतिरिच्य कदापि तस्य नाम्ना किमपि पत्रमागतमिति कोऽपि कदापि न जानाति।**



एकस्मिन् दिने श्रीनायारः पत्रमेकं धृत्वा मस्तकमवनमय्य पठन् आसीत्। नेत्रतीराद् विगलिता अश्रुधारा आर्द्रीकरोति स्म पत्रस्य अर्धाधिकं भागम् । तदानीमेव तस्य कार्यालयलिपिकः श्रीदासःप्रविशति। श्रीनायारः तमुक्तवान्–अधुना मम गमनसमयः समुपागत एव। मम दायित्वहस्तान्तरणपत्रकं सज्जीकुरु। अहमधुना द्वित्राणां दिवसानां सकारणावकाशं स्वीकरिष्यामि। पुनः तदनु स्वीकरिष्यामि दीर्घावकाशम् । यदि कस्मैचिद् अज्ञातेन मया रूक्षो व्यवहारः प्रदर्शितः स्यात्, तदर्थं ते मह्यमुदारचित्तेन क्षमां प्रदास्यन्ति इति सर्वेभ्यो निवेदयतु। अनन्तरं सर्वे अश्रुलहृदयैः सौप्रस्थानिकीं ज्ञापितवन्तः।

तस्य गमनस्य दिवसत्रयात्परं कार्यालये पत्रमेकमागतम्। कौतूहलवशात् श्रीदासः तत्पत्रमुद्घाटितवान् । लेखिका आसीत् सुश्री मेरी यस्याः पार्श्वे सः प्रतिमासमर्धाधिकं धनं धनादेशेन प्रेषयति स्म। पत्रे एवं लिखितमासीत्.....

श्रीनायार!

भगवान् यीशुस्तव मङ्गलं वितनोतु । मम पूर्वतनं पत्रं त्वया प्राप्तं स्यात्। तव समीपे इदं मम शेषपत्रम्। यतो हि मम जीवनप्रदीपो निर्वापितो भवितुमिच्छति। प्रायस्तवागमनसमये अहं न स्थास्यामि। पूर्वपत्रे-अहमाश्रमस्य सर्वविधमायव्ययाकलनं प्रेषितवती। केवलं यीशोः समीपे गमनात्पूर्वं तव दर्शनमिच्छामि। प्रथमं त्वया निर्मितोऽनाथाश्रमोऽधुना महाद्रुमेण परिणतः। अधुनात्र शताधिका अनाथशिशवो लालिताः पालिताश्च भवन्ति । तव हस्तयोस्तव अनाथाश्रमं समर्प्य अहं सौप्रस्थानिकीमिच्छामि। अद्य समाजस्त्वत्तो बहु किमपि इच्छति। यौ कौ वां तव पितरौ भवतां नाम, तौ धन्यवादार्हौ। कदाचित्ताभ्यां त्वं विस्मृतः स्यात् त्वमवश्यमेतान् शिशून् संपोष्य उत्तममनुष्यान् कारयिष्यसीति मम कामना वर्तते। प्रभुः त्वत्त इमामेवाशां पोषयति। यो जन्म दत्तवान्, स जीवितुमधिकारमपि दत्तवान्। भगवान् त्वां दीर्घजीवनं कारयतु ।इति॥

तव शुभाकांक्षिणी
सुश्रीः मेरी

## शब्दार्थाः टिप्पणयश्च

| | | |
|---|---|---|
| **तथाप्यस्मिन्** | – | तथापि + अस्मिन्, तब भी इसमें। |
| **बोधगम्या** | – | बोधेन गम्या, बोध (ज्ञान) के द्वारा गम्य, जानने योग्य। |
| **मनोनिवेशः** | – | मनसः निवेशः, ष. तत्पुरुष समास, दत्तचित्त होना। |
| **प्रत्यागमनम्** | – | प्रति + आङ् + गम् + ल्युट्, वापिस लौटना। |
| **कर्मनैपुण्यम्** | – | कर्मसु नैपुण्यम्, सप्तमी तत्पुरुष, कर्मों में निपुणता |
| **स्वीकृत्य** | – | स्वी + कृ + ल्यप्, स्वीकार करके, |
| **अपमिश्रणम्** | – | मिलावट |
| **अनुमीयते** | – | अनु + मा + लट् प्रथम पुरुष एकवचन, अनुमान किया जाता है। |

| | | |
|---|---|---|
| **न्यूनीभूतम्** | – | न्यूनी + भू + क्त, कम हो गया। |
| **अतिरिच्य** | – | अतिरिक्त |
| **विगलिता** | – | वि + गल् + क्त + टाप्, निकली हुई। |
| **अवनमय्य** | – | अव + नम् + ल्यप्, झुकाकर |
| **दायित्वहस्तान्तरणम्** | – | दूसरे को प्रभार हस्तगत कराना |
| **सज्जीकुरु** | – | सज्ज् + च्वि + कृ + लोट् मध्यम पुरुष एकवचन, तैयार करो। |
| **धनादेशेन** | – | धनाय आदेशः, तेन चतुर्थी तत्पुरुष, मनीआर्डर से। |
| **निर्वापितः** | – | निर् + वापि (णिच्) + क्तः, शान्त |
| **आयव्ययाकलनम्** | – | आय व्यय का विवरण |
| **सौप्रस्थानिकी** | – | विदाई |
| **पितरौ** | – | माता च पिता च (द्वंद्व समास) माता और पिता। |

## अभ्यासः

1. **संस्कृतभाषया उत्तराणि लिखत–**

(क) श्रीनायारः कुत्र गमनाय इच्छां न प्रकटितवान्?

(ख) विभागस्य विपक्षे केषाम् अभियोगो नास्ति?

(ग) श्रीनायारः स्ववेतनस्य अर्धाधिकं भागं कुत्र प्रेषयति स्म?

(घ) श्रीनायारस्य नेत्रतीराद् विगलिता अश्रुधारा किम् अकरोत्?

(ङ) बहुदिनेभ्यः स्थगितानां समस्यानां समाधानं कदा जातम्?

(च) श्रीनायारस्य पार्श्वे पत्रं कया प्रेषितम्?

(छ) आश्रमे के लालिताः पालिताश्च भवन्ति?

(ज) पत्रलेखिका कस्य हस्तयोः अनाथाश्रमं समर्प्य सौप्रस्थानिकीमिच्छति?

**2. सप्रसङ्गं हिन्दीभाषया व्याख्यां कुरुत–**

(क) उपभोक्तृणामपि अभियोगो नास्ति विभागस्य विपक्षे

(ख) सर्वे अश्रुलहृदयैः सौप्रस्थानिकीं ज्ञापितवन्तः

(ग) त्वया निर्मितोऽयं क्षुद्रोऽनाथाश्रमोऽधुना महाद्रुमेण परिणतः।

**3. अधः समस्तपदानां विग्रहाः दत्ताः, तानाश्रित्य समस्तपदानि रचयत समासनामापि लिखत–**

(क) कालस्य खण्डः तस्मिन् = ..................................

(ख) कर्मसु नैपुण्यम् = ..................................

(ग) द्वि च त्रि च अनयोः समाहारः, तेषाम् = ..................................

(घ) दीर्घः अवकाशः, तम् = ..................................

(ङ) धनाय आदेशः, तेन = ..................................

(च) जीवनस्य प्रदीपः = ..................................

**4. रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत–**

(क) श्रीनायारः स्वल्पभाषी आसीत्।

(ख) वर्षत्रयस्य आकलनात् ज्ञायते यत् विभागस्य कार्यनैपुण्यं दशगुणैः वर्धितम्।

(ग) तस्य राज्येन सह कश्चित् सम्पर्कः नास्ति।

(घ) पत्रस्य अर्धाधिकं भागं अश्रुधारा आर्द्रीकरोति स्म।

(ङ) श्रीदासः तत्पत्रमुद्घाटितवान्।

(च) भगवान् त्वां दीर्घजीवनं कारयतु।

**5. विपरीतार्थकपदानि मेलयत–**

| | |
|---|---|
| (क) आगत्य | (क) विस्मृतः |
| (ख) इच्छाम् | (ख) गत्वा |
| (ग) स्वल्पभाषी | (ग) न्यूनीभूतम् |
| (घ) प्रारभ्य | (घ) पक्षे |
| (ङ) अधिकीभूतम् | (ङ) बहुभाषी |
| (च) विपक्षे | (च) समाप्य |
| (छ) स्मृतः | (छ) लघुजीवनम् |
| (ज) दीर्घजीवनम् | (ज) अनिच्छाम् |

**6. अधोलिखितानां विशेष्यपदानां विशेषणपदानि पाठात् चित्वा लिखत-**

वार्तालापः, वर्षत्रयस्य, अश्रुधारा, समस्यानाम्, व्यवहारः, पत्रम्, शिशवः।

**7. अधोलिखितेषु पदेषु प्रकृतिप्रत्ययविभागं कुरुत-**

समाप्य, जातम्, त्यक्त्वा, धृत्वा, पठन्, संपोष्य।

## योग्यताविस्तारः

1. प्रस्तुतकथायाः मूललेखकः श्रीचन्द्रशेखरदासवर्मा ओडियासाहित्यक्षेत्रे लब्धप्रतिष्ठः कथाकारो वर्तते। अस्य जन्म 1945 तमे ईशवीयसंवत्सरे अभवत्। अस्य द्वादशकथाग्रन्थाः, एकः नाट्यसङ्ग्रहः त्रयः समीक्षा-ग्रन्थाश्च प्रकाशिताः सन्ति। पाषाणीकन्या वोमा च श्रीवर्मणः प्रसिद्धौ कथासंग्रहौ स्तः। 'दीनबन्धुः श्रीनायारः' इति कथा पाषाणीकन्या इति कथासंग्रहात् संकलिता।
2. भारतस्य प्रदेशाः- भारतवर्षे अष्टाविंशति-प्रदेशाः वर्तन्ते। षट् केन्द्रशासितप्रदेशाः सन्ति।
3. अत्रत्याः जनाः विविधभाषाभाषिणः सन्तिः। हिन्दीम् आङ्ग्लभाषां च अतिरिच्य मलयालम-तमिल-उडिया-बङ्गला-गुजराती-मराठी-कोंकणी-कन्नड-असमिया-पञ्जाबी भाषाः अत्रत्याः जनाः वदन्ति।
4. पत्रलेखनं साहित्ये प्रसिद्धा विधा वर्तते।

   प्रस्तुतपाठे समागतं पत्रम् अवलोक्य स्वकीयान् विचारान् संस्कृतेन लिखत।